॥ वाक्यवृत्तिः ॥

॥ श्री गणेशाय नमः॥

सर्गस्थितिप्रलयहेतुमचिन्त्यशक्तिं विश्वेश्वरं विदितविश्वमनन्तमूर्तिम् ।
निर्मुक्तबन्धनमपारसुखाम्बुराशिं श्रीवल्लभं विमलबोधघनं नमामि ॥ १॥

यस्य प्रसादादहमेव विष्णुर्मय्येव सर्वं परिकल्पितं च ।
इत्थं विजानामि सदात्मरूपं तस्यांघ्रिपद्मं प्रणतोऽस्मि नित्यम् ॥ २॥

तापत्रयार्कसंतप्तः कश्चिदुद्विग्नमानसः ।
शमादिसाधनैर्युक्तः सद्गुरुं परिपृच्छति ॥ ३॥

अनायासेन येनास्मान्मुच्येयं भवबन्धनात् ।
तन्मे संक्षिप्य भगवन्केवलं कृपया वद ॥ ४॥

गुरुरुवाच ।
साध्वीते वचनव्यक्तिः प्रतिभाति वदामि ते ।
इदं तदिति विस्पष्टं सावधानमनाः शृणु ॥ ५॥

तत्त्वमस्यादिवाक्योत्थं यज्जीवपरमात्मनोः ।
तादात्म्यविषयं ज्ञानं तदिदं मुक्तिसाधनम् ॥ ६॥

शिष्य उवाच ।
को जीवः कः परश्चात्मा तादात्म्यं वा कथं तयोः ।
तत्त्वमस्यादिवाक्यं वा कथं तत्प्रतिपादयेत् ॥ ७॥

गुरुरुवाच ।
अत्र ब्रूमः समाधानं कोऽन्यो जीवस्त्वमेव हि ।
यस्त्वं पृच्छसि मां कोऽहं ब्रह्मैवासि न संशयः ॥ ८॥

शिष्य उवाच ।
पदार्थमेव जानामि नाद्यापि भगवन्स्फुटम् ।
अहं ब्रह्मेति वाक्यार्थं प्रतिपद्ये कथं वद ॥ ९॥

गुरुरुवाच ।
सत्यमाह भवानत्र विगानं नैव विद्यते । var विज्ञानं
हेतुः पदार्थबोधो हि वाक्यार्थावगतेरिह ॥ १०॥

अन्तःकरणतद्वृत्तिसाक्षिचैतन्यविग्रहः ।
आनन्दरूपः सत्यः सन्किं नात्मानं प्रपद्यसे ॥ ११॥

सत्यानन्दस्वरूपं धीसाक्षिणं बोधविग्रहम् ।
चिन्तयात्मतया नित्यं त्यक्त्वा देहादिगां धियम् ॥ १२॥

रूपादिमान्यतः पिण्डस्ततो नात्मा घटादिवत् ।
वियदादिमहाभूतविकारत्वाच्च कुम्भवत् ॥ १३॥

अनात्मा यदि पिण्डोऽयमुक्तहेतुबलान्मतः ।
करामलकवत्साक्षादात्मानं प्रतिपादय ॥ १४॥

घटद्रष्टा घटाद्भिन्नः सर्वथा न घटो यथा ।
देहद्रष्टा तथा देहो नाहमित्यवधारय ॥ १५॥

एवमिन्द्रियदृङ्नाहमिन्द्रियाणीति निश्चिनु ।
मनोबुद्धिस्तथा प्राणो नाहमित्यवधारय ॥ १६॥

संघातोऽपि तथा नाहमिति दृश्यविलक्षणम् ।
द्रष्टारमनुमानेन निपुणं सम्प्रधारय ॥ १७॥

देहेन्द्रियादयो भावा हानादिव्यापृतिक्षमाः ।
यस्य सन्निधिमात्रेण सोऽहमित्यवधारय ॥ १८॥

अनापन्नविकारः सन्नयस्कान्तवदेव यः ।
बुद्ध्यादींश्चालयेत्प्रत्यक् सोऽहमित्यवधारय ॥ १९॥

अजडात्मवदाभान्ति यत्सान्निध्याज्जडा अपि ।
देहेन्द्रियमनःप्राणाः सोऽहमित्यवधारय ॥ २०॥

अगमन्मे मनोऽन्यत्र साम्प्रतं च स्थिरीकृतम् ।
एवं यो वेत्ति धीवृत्तिं सोऽहमित्यवधारय ॥ २१॥

स्वप्नजागरिते सुप्तिं भावाभावौ धियां तथा ।
यो वेत्त्यविक्रियः साक्षात्सोऽहमित्यवधारय ॥ २२॥

घटावभासको दीपो घटादन्यो यथेष्यते ।

देहावभासको देही तथाहं बोधविग्रहः ॥ २३॥

पुत्रवित्तादयो भावा यस्य शेषतया प्रियाः ।
द्रष्टा सर्वप्रियतमः सोऽहमित्यवधारय ॥ २४॥

परप्रेमास्पदतया मा न भूवमहं सदा ।
भूयासमिति यो द्रष्टा सोऽहमित्यवधारय ॥ २५॥

यः साक्षिलक्षणो बोधस्त्वंपदार्थः स उच्यते ।
साक्षित्वमपि बोद्धृत्वमविकारितयात्मनः ॥ २६॥

देहेन्द्रियमनःप्राणाहङ्कृतिभ्यो विलक्षणः ।
प्रोज्झिताशेशषड्भावविकारस्त्वंपदाभिधः ॥ २७॥

त्वमर्थमेवं निश्चित्य तदर्थं चिन्तयेत्पुनः ।
अतद्व्यावृत्तिरूपेण साक्षाद्विधिमुखेन च ॥ २८॥

निरस्ताशेषसंसारदोषोऽस्थुलादिलक्षणः ।
अदृश्यत्वादिगुणकः पराकृततमोमलः ॥ २९॥

निरस्तातिशयानन्दः सत्यप्रज्ञानविग्रहः ।
सत्तास्वलक्षणः पूर्ण परमात्मेति गीयते ॥ ३०॥

सर्वज्ञत्वं परेशत्वं तथा सम्पूर्णशक्तिता ।
वेदैः समर्थ्यते यस्य तद्ब्रह्मेत्यवधारय ॥ ३१॥

यज्ज्ञानात्सर्वविज्ञानं श्रुतिषु प्रतिपादितम् ।
मृदाद्यनेकदृष्टान्तैस्तद्ब्रह्मेत्यवधारय ॥ ३२॥

यदानन्त्यं प्रतिज्ञाय श्रुतिस्तत्सिद्धये जगौ ।
तत्कार्यत्वं प्रपञ्चस्य तद्ब्रह्मेत्यवधारय ॥ ३३॥

विजिज्ञास्यतया यच्च वेदान्तेषु मुमुक्षुभिः ।
समर्थ्यतेऽतियत्नेन तद्ब्रह्मेत्यवधारय ॥ ३४॥

जीवात्मना प्रवेशश्च नियन्तृत्वं च तान् प्रति ।
श्रूयते यस्य वेदेषु तद्ब्रह्मेत्यवधारय ॥ ३५॥

कर्मणां फलदातृत्वं यस्यैव श्रूयते श्रुतौ ।
जीवानां हेतुकर्तृत्वं तद्ब्रह्मेत्यवधारय ॥ ३६॥

तत्त्वंपदार्थौ निर्णीतौ वाक्यार्थश्चिन्त्यतेऽधुना ।
तादात्म्यमत्र वाक्यार्थस्तयोरेव पदार्थयोः ॥ ३७॥

संसर्गो वा विशिष्टो वा वाक्यार्थो नात्र सम्मतः ।
अखण्डैकरसत्वेन वाक्यार्थो विदुषां मतः ॥ ३८॥

प्रत्यग्बोधो य आभाति सोऽद्वयानन्दलक्षणः ।
अद्वयानन्दरूपश्च प्रत्यग्बोधैकलक्षणः ॥ ३९॥

इत्थमन्योन्यतादात्म्यप्रतिपत्तिर्यदा भवेत् ।
अब्रह्मत्वं त्वमर्थस्य व्यावर्तेत तदैव हि ॥ ४०॥

तदर्थस्य पारोक्ष्यं यद्येवं किं ततः श्रुणु ।
पूर्णानन्दैकरूपेण प्रत्यग्बोधोवतिष्ठते ॥ ४१॥

तत्त्वमस्यादिवाक्यं च तादात्म्यप्रतिपादने ।
लक्ष्यौ तत्त्वंपदार्थौ द्वावुपादाय प्रवर्तते ॥ ४२॥

हित्वा द्वौ शबलौ वाच्यौ वाक्यं वाक्यार्थबोधने ।
यथा प्रवर्ततेऽस्माभिस्तथा व्याख्यातमादरात् ॥ ४३॥

आलम्बनतयाभाति योऽस्मत्प्रत्ययशब्दयोः ।
अन्तःकरणसंभिन्नबोधः स त्वंपदाभिधः ॥ ४४॥

मायोपाधिर्जगद्योनिः सर्वज्ञत्वादिलक्षणः ।
परोक्ष्यशबलः सत्याद्यात्मकस्तत्पदाभिधः ॥ ४५॥

प्रत्यक्परोक्षतैकस्य सद्वितीयत्वपूर्णता ।
विरुध्यते यतस्तस्माल्लक्षणा सम्प्रवर्तते ॥ ४६॥

मानान्तरविरोधे तु मुख्यार्थस्य परिग्रहे ।
मुख्यार्थेनाविनाभूते प्रतीतिर्लक्षणोच्यते ॥ ४७॥

तत्त्वमस्यादिवाक्येषु लक्षणा भागलक्षणा ।
सोऽयमित्यादिवाक्यस्थपदयोरिव नापरा ॥ ४८॥

अहं ब्रह्मेतिवाक्यार्थबोधो यावद्दृढीभवेत् ।
शमादिसहितस्तावदभ्यसेच्छ्रवणादिकम् ॥ ४९॥

श्रुत्याचार्यप्रसादेन दृढो बोधो यदा भवेत् ।
निरस्ताशेषसंसारनिदानः पुरुषस्तदा ॥ ५०॥

विशीर्णकार्यकरणो भूतसूक्ष्मैरनावृतः ।
विमुक्तकर्मनिगडः सद्य एव विमुच्यते ॥ ५१॥

प्रारब्धकर्मवेगेन जीवन्मुक्तो यदा भवेत् ।
किञ्चित्कालमनारब्धकर्मबन्धस्य संक्षये ॥ ५२॥

निरस्तातिशयानन्दं वैष्णवं परमं पदम् ।
पुनरावृत्तिरहितं कैवल्यं प्रतिपद्यते ॥ ५३॥

॥ इति परमहंसपरिव्राजकाचार्यश्रीमच्छङ्कराचार्यविरचिता
वाक्यवृत्तिः समाप्त ॥